श्रीराम
# ललिता त्रिशती नामावलि

ककार रूपायै नमः
कल्याण्यै नमः
कल्याण गुण शालिन्यै नमः
कल्याण शैल निलयायै नमः
कमनीयायै नमः
कलावत्यै नमः
कमलाक्ष्यै नमः
कल्मषघ्न्यै नमः
करुणामृतसागरायै नमः
10 कदम्ब काननावासायै नमः
कदम्ब कुसुमप्रियायै नमः
कन्दर्प विद्यायै नमः
कन्दर्प जनकापांगवीक्षणायै नमः
कर्पूर वीटी सौरभ्य कल्लोलित ककुप्तटायै नमः
कलि दोष हरायै नमः
कंजलोचनायै नमः
कम्र विग्रहायै नमः
कर्मादि साक्षिण्यै नमः
कारयित्र्यै नमः
कर्म फलप्रदायै नमः 20
एकाररूपायै नमः
एकाक्षर्यै नमः
एकानेकाक्षराकृतये नमः
एतत्तदित्यनिर्देश्यायै नमः
एकानन्द चिदाकृतये नमः
एवमित्यागमाबोध्यायै नमः
एक भक्ति मदर्चितायै नमः
एकाग्रचित्तनिर्ध्यातायै नमः
एषणारहितादृतायै नमः
एलसुगन्धि चिकुरायै नमः 30
एनःकूटविनाशिन्यै नमः
एकभोगायै नमः
एकरसायै नमः
एकैश्वर्य प्रदायिन्यै नमः
एकातपत्रसाम्राज्यप्रदायै नमः
एकान्तपूजितायै नमः
एधमानप्रभायै नमः

एजदनेकजगदीश्वर्यै नमः
एकवीरादिसंसेव्यायै नमः
40 एकप्राभवशालिन्यै नमः
ईकाररूपायै नमः
ईशित्र्यै नमः
ईप्सितार्थप्रदायिन्यै नमः
ईदृगित्यविनिर्देश्यायै नमः
ईश्वरत्वविधायिन्यै नमः
ईशानादिब्रह्ममय्यै नमः
ईशित्वाद्यष्टसिद्धिदायै नमः
ईक्षित्र्यै नमः
ईक्षणसृष्टाण्डकोटये नमः
50 ईश्वरवल्लभायै नमः
ईडितायै नमः
ईश्वरार्धाङ्गशरीरायै नमः
ईशाधिदेवतायै नमः
ईश्वरप्रेरणाकर्यै नमः
ईशताण्डवसाक्षिण्यै नमः
ईश्वरोत्संगनिलयायै नमः
ईतिबाधाविनाशिन्यै नमः

ईहाविरहितायै नमः
ईशशक्त्यै नमः
ईषत्स्मिताननायै नमः 60
लकाररूपायै नमः
ललितायै नमः
लक्ष्मीवाणीनिषेवितायै नमः
लाकिन्यै नमः
ललनारूपायै नमः
लसद्दाडिमपाटलायै नमः
ललन्तिकालसत्फालायै नमः
ललाटनयनार्चितायै नमः
लक्षणोज्ज्वलदिव्याङ्ग्यै नमः
लक्षकोट्यण्डनायिकायै नमः 70
लक्ष्यार्थायै नमः
लक्षणागम्यायै नमः
लब्धकामायै नमः
लतातनवे नमः
ललामराजदलिकायै नमः
लम्बिमुक्तालताञ्चितायै नमः
लम्बोदरप्रसवे नमः

ऌभ्यायै नमः

ऌज्जाढ्यायैनमः

80 ऌयवार्जितायै नमः

ह्रींकाररूपायै नमः

ह्रींकारनिलयायै नमः

ह्रीं पदप्रियायै नमः

ह्रीं कारबीजायै नमः

ह्रीं कारमन्त्रायै नमः

ह्रीं कारलक्षणायै नमः

ह्रीं कारजपसुप्रीतायै नमः

ह्रींमत्यै नमः

ह्रींविभूषणायै नमः

90 ह्रीं शीलायै नमः

ह्रीं पदाराध्यायै नमः

ह्रीं गर्भायै नमः

ह्रीं पदाभिधायै नमः

ह्रीं कारवाच्यायै नमः

ह्रींकारवाच्यायै नमः

ह्रींकार पूज्यायै नमः

ह्रीं कार पीठिकायै नमः

ह्रीं कार वेद्यायै नमः

ह्रींकारचिन्त्यायै नमः

ह्रीं नमः 100

ह्रीं शरीरिण्यै नमः

हकाररूपायै नमः

हलधृक्पूजितायै नमः

हरिणेक्षणायै नमः

हरप्रियायै नमः

हराराध्यायै नमः

हरिब्रह्मेन्द्र वन्दितायै नमः

हयारूढासेविताङ्ग्यै नमः

हयमेधसमर्चितायै नमः

हर्यक्षवाहनायै नमः 110

हंस वाहनायै नमः

हतदानवायैनमः
हत्यादिपापशमन्यैनमः
हरिदश्वादिसेवितायैनमः
हस्तिकुम्भोत्तुंगकुचायैनमः
हस्तिकृत्तिप्रियांगनायैनमः
हरिद्राकुकुमादिग्धायैनमः
हर्यश्वाद्यमरार्चितायैनमः
हरिकेशसख्यैनमः
हादिविद्यायैनमः
120 हालामदालसायैनमः
सकाररूपायैनमः
सर्वज्ञायैनमः
सर्वेश्यैनमः
सर्वमंगलायैनमः
सर्वकर्त्र्यैनमः
सर्वभर्त्र्यैनमः
सर्वहन्त्र्यैनमः
सनातनायैनमः
सर्वानवद्यायैनमः

सर्वांगसुंदर्यैनमः 130
सर्वसाक्षिण्यैनमः
सर्वात्मिकायैनमः
सर्वसौख्यदात्र्यैनमः
सर्वविमोहिन्यैनमः
सर्वाधारायैनमः
सर्वगतायैनमः
सर्वावगुणवर्जितायैनमः
सर्वारुणायैनमः
सर्वमात्रेनमः
सर्वभूषणभूषितायैनमः 140
ककारार्थायैनमः
कालहन्त्र्यैनमः
कामेश्यैनमः
कामितार्थदायैनमः
कामसंजीवन्यैनमः
कल्यायैनमः
कठिनस्तनमण्डलायैनमः
करभोरवेनमः

कलानाथमुख्यै नमः
150 कचजितांबुदायै नमः
कटाक्षस्यन्दिकरुणायै नमः
कपालिप्राणनायिकायै नमः
कारुण्यविग्रहायै नमः
कान्तायै नमः
कान्तिधूतजपावल्यै नमः
कलालापायै नमः
कम्बुकण्ठ्यै नमः
करनिर्जितपल्लवायै नमः
कल्पवल्लीसमभुजायै नमः
160 कस्तूरीतिलकाञ्चितायै नमः
हकारार्थायै नमः
हंसगत्यै नमः
हाटकाभरणोज्ज्वलायै नमः

हारहारिकुचाभोगायै नमः
हाकिन्यै नमः
हल्यवर्जितायै नमः
हरित्पतिसमाराध्यायै नमः
हठात्कारहतासुरायै नमः
हर्षप्रदायै नमः
हविर्भोक्त्र्यै नमः 170
हार्दसंतमसापहायै नमः
हल्लीसलास्यसंतुष्टायै नमः
हंसमन्त्रार्थरूपिण्यै नमः
हानोपादाननिर्मुक्तायै नमः
हर्षिण्यै नमः
हरिसोदर्यै नमः
हाहाहूहूमुखस्तुत्यायै नमः

| | |
|---|---|
| × हानिवृद्धिविवर्जितायैनमः | लज्जापदसमाराध्यायैनमः |
| हैयंगवीनहृदयायैनमः | लंपटायैनमः |
| 180 हरिगोपारुणांशुकायैनमः | लकुटेश्वर्यैनमः × |
| लकाराख्यायैनमः | लब्धमानायैनमः |
| लतापूज्यायैनमः | लब्धरसायैनमः |
| लयस्थित्युद्भवेश्वर्यैनमः | लब्धसंपत्समुन्नत्यैनमः 200 |
| लास्यदर्शनसंतुष्टायैनमः | ह्रींकारिण्यैनमः × |
| लाभालाभविवर्जितायैनमः | ह्रींकाराद्यायैनमः |
| लंघ्येतराज्ञायैनमः | ह्रींमध्यायैनमः |
| लावण्यशालिन्यैनमः | ह्रींशिखामण्यैनमः |
| × लघुसिद्धिदायैनमः | ह्रींकारकुंडाग्निशिखायैनमः |
| लाक्षारससवर्णाभायैनमः | ह्रींकारशशिचान्द्रिकायैनमः |
| 190 लक्ष्मणाग्रजपूजितायैनमः | ह्रींकारभास्कररुच्यैनमः |
| लभ्येतरायैनमः | ह्रींकाराम्भोदचंचलायैनमः |
| लब्धभक्तिसुलभायैनमः | ह्रींकारकन्दांकुरिकायैनमः |
| लांगलायुधायैनमः | ह्रींकारैकपरायणायैनमः 210 |
| लग्नचामरहस्तश्रीशारदा | ह्रींकारदीर्घिकाहंस्यैनमः |
| परिवीजितायैनमः | ह्रींकारोद्यानकेकिन्यैनमः |

ह्रींकारारण्य हरिण्यै नमः
ह्रींकारावाल वल्लर्यै नमः
ह्रींकारपंजर शुक्यै नमः
ह्रींकारांगण दीपिकायै नमः
ह्रींकारकंदरा सिंह्यै नमः
ह्रींकाराम्भोज भृंगिकायै नमः
ह्रींकार सुमनो माध्व्यै नमः
220 ह्रींकार तरुमंजर्यै नमः
सकाराख्यायै नमः
समरसायै नमः
सकलागम संस्तुतायै नमः
सर्ववेदान्त तात्पर्य भूमयेनमः
सदसदाश्रयायै नमः
सकलायै नमः
सच्चिदानन्दायै नमः
साध्व्यायै नमः
210 सद्गतिदायिन्यै नमः
230 सनकादि मुनिध्येयायै नमः

सदाशिव कुटुम्बिन्यै नमः
सकलाधिष्ठान रूपायै नमः
सत्यरूपायै नमः
समाकृतयै नमः
सर्वप्रपंच निर्मात्र्यै नमः
समानाधिक वर्जितायै नमः
सर्वोत्तुंगायै नमः
संगहीनायै नमः
सगुणायै नमः
सकलेश्वर्यै नमः 240
ककारिण्यै नमः
काव्यलोलायै नमः
कामेश्वरमनोहरायै नमः
कामेश्वरप्रमनाड्यै नमः
कामेशोत्संग वासिन्यै नमः
कामेश्वरालिंगितांग्यै नमः
कामेश्वर सुखप्रदायै नमः
कामेश्वरप्रणयिन्यै नमः

कामेश्वर विलासिन्यै नमः
250 कामेश्वर तपःसिद्ध्यै नमः
कामेश्वर मनःप्रियायै नमः
कामेश्वर प्राणनाथायै नमः
कामेश्वर विमोहिन्यै नमः
कामेश्वर ब्रह्मविद्यायै नमः
कामेश्वर गृहेश्वर्यै नमः
कामेश्वराह्लादकर्यै नमः
कामेश्वर महेश्वर्यै नमः
कामेश्वर्यै नमः
कामकोटि निलयायै नमः
260 कांक्षितार्थदायै नमः
लकारिण्यै नमः
लब्धरूपायै नमः
लब्धधियै नमः
लब्ध वांछितायै नमः
लब्ध पापमनोदूरायै नमः
लब्धाहंकार दुर्गमायै नमः
लब्ध शक्त्यै नमः

लब्ध देहायै नमः
लब्धैश्वर्य समुन्नत्यै नमः
लब्ध वृद्ध्यै नमः 270
लब्ध लीलायै नमः
लब्ध यौवन शालिन्यै नमः
लब्धातिशय सर्वांग
सौंदर्यायै नमः
लब्ध विभ्रमायै नमः
लब्ध रागायै नमः
लब्ध पत्यै नमः
लब्ध नानागम स्थित्यै नमः
लब्ध भोगायै नमः
लब्ध सुखायै नमः
लब्ध हर्षादिपूरितायै नमः 280
ह्रीं कारमूर्त्यै नमः
ह्रीं कार सौधश्रृंग कपोतिका
यै नमः
ह्रींकार दुग्धाब्धि सुधा
यै नमः

ह्रींकारकमलेंदिरायैं नमः

ह्रींकारमणिदीपार्चिषे नमः

ह्रींकार तरुशारिकायै नमः

ह्रींकारपेटकमणये नमः

ह्रींकारादर्शबिम्बितायै नमः

ह्रींकारकोशासि लतायै नमः

290 ह्रींकारास्थाननर्तक्यै नमः

ह्रींकारशुक्तिकामणये नमः

ह्रींकार बोधितायै नमः

ह्रींकारमयसौवर्णस्तम्भ विद्रु

मपुत्रिकायै नमः

ह्रींकारवेदोपनिषदे नमः

ह्रींकाराध्वरदक्षिणायै नमः

280 ह्रींकारनन्दनारामनवकल्पक

वल्लर्यै नमः

ह्रींकार हिमवद्गङ्गायै नमः

ह्रींकारार्णव कौस्तुभायै नमः

ह्रींकारमन्त्रसर्वस्वायै   1

नमः

ह्रींकारपर सौख्यदायै

नमः   300

श्रीरस्तु

[illegible]

Vishnu Dattatraya

# ललिता त्रिशती नामावलि

-श्री-

लक्ष्मण बालकृष्ण दसनुरकर

उर्फ़ भाऊ साहब दसनुरकर

नन्दलालपुरा
इन्दौर